## दूर्वाक्षतदानमन्त्रः

ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् योगक्षेमो नः कल्पताम्। मन्त्रार्थाः सिद्धयः सन्तु पूर्णाः सन्तु मनोरथाः। शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव॥

## यज्ञोपवीतधारणमन्त्रः

**वाजसनेयिनाम्**—ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ **छन्दोगानाम्**—ॐ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि॥ **जीर्णयज्ञोपवीतत्यागमन्त्रः**—एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया। जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम्॥

## ग्रहाणां यजुर्वेदीय (वाजसनेयि) शान्तिमन्त्राः

**सूर्यस्य**—ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥ **चन्द्रस्य**—ॐ इमं देवा असपत्नᳬं सुवध्वं महते क्षत्राय महते ज्येष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳬं राजा॥ **मङ्गलस्य**—ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपाᳬं रेताᳬंसि जिन्वति॥ **बुधस्य**—ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सᳬं सृजेथामयञ्च। अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत॥ **बृहस्पतेः**—ॐ बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋत प्रजात तदस्मासु द्रविणन्धेहि चित्रम्॥ **शुक्रस्य**—ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानᳬं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु॥ **शनेः**—ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये। संयोरभिस्रवन्तु नः॥ **राहोः**—ॐ कयानश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥ **केतोः**—ॐ केतुं कृण्वन्न केतवे पेशोमर्या अपेशसे। समुषद्भिरजायथाः॥

## ग्रहाणां सामवेदीय (छन्दोग) शान्तिमन्त्राः

**सूर्यस्य**—ॐ उदुत्यञ्जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्॥ **चन्द्रस्य**—ॐ सन्ते पयांसि समयन्तुवाजाः संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानिधिष्व॥ **मङ्गलस्य**— ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति॥ **बुधस्य**—ॐ अग्ने विवश्वदुषसश्चित्रां राध्नो अमर्त्य आदाशुषे। जातवेदो वहात्वमद्या देवो उपर्ब्बुधः॥ **बृहस्पतेः**—ॐ बृहस्पते परिदीयारथेन रक्षोहामित्राँ अपबाधमानः। प्रभञ्जत्सेनाः प्रमृणो युधाजयन्नस्माकं मेध्यविता रथानाम्॥ **शुक्रस्य**—ॐ शुक्रन्ते अन्यद्यजन्ते अन्यद्विषुरूपे अहनी द्यौरिवासि विश्वाहि माया। अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु॥ **शनेः**—ॐ शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये। संयोरभिस्रवन्तु नः॥ **राहोः**—ॐ कयानश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥ **केतोः**—ॐ केतुं कृण्वन्न केतवे पेशोमर्या अपेशसे। समुषद्भिरजायथाः॥

## • विशिष्टपर्वसूची •

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मौनापञ्चमी | १० जुलाई | निशापूजा | २३ अक्टूबर | वीडपञ्चमी | ०५ दिसम्बर | जूडिशीतल | १५ अप्रील |
| सोमवत्यमा | २० जुलाई | महाष्टमीव्रत | २४ अक्टूबर | कालभैरवाष्टमी | ०७ दिसम्बर | सूर्यषष्ठीव्रत | १८ अप्रील |
| मधुश्रावणी | २३ जुलाई | महानवमीव्रत | २५ अक्टूबर | सोमवत्यमा | १४ दिसम्बर | रामनवमी | २१ अप्रील |
| नागपञ्चमी | २५ जुलाई | विजयादशमी | २६ अक्टूबर | विवाहपञ्चमी | १९ दिसम्बर | कुँवरसिंहजयन्ती | २३ अप्रील |
| शीतलापूजा | २७ जुलाई | कोजागरा | ३० अक्टूबर | बबाजीजयन्ती | १९ दिसम्बर | महावीरजयन्ती | २४ अप्रील |
| संस्कृतदिवस | ०३ अगस्त | लक्ष्मीपूजा | ३० अक्टूबर | गीताजयन्ती | २५ दिसम्बर | रविव्रतविसर्ग | २५ अप्रील |
| रक्षाबन्धन | ०३ अगस्त | धन्वन्तरिजयन्ती | १२ नवम्बर | हरिहरक्षेत्रस्नान | ३० दिसम्बर | सप्ताडोराविसर्ग | २५ अप्रील |
| कृष्णाष्टमी | १२ अगस्त | अमृतप्राप्ति | १२ नवम्बर | दशतारकारम्भ | ११ जनवरी | श्रमिकदिवस | ०१ मई |
| स्वतन्त्रतादिवस | १५ अगस्त | हनुमानजयन्ती | १३ नवम्बर | मकरसङ्क्रान्ति | १४ जनवरी | शिवाजीजयन्ती | १२ मई |
| कुशोत्पाटन | १९ अगस्त | दीपावली | १४ नवम्बर | दशतारकान्त | २१ जनवरी | अक्षयतृतीया | १४ मई |
| हरितालिका | २१ अगस्त | लक्ष्मीपूजा | १४ नवम्बर | गणतन्त्रदिवस | २६ जनवरी | परशुरामजयन्ती | १४ मई |
| चौठचन्द्र | २२ अगस्त | कालीपूजा | १४ नवम्बर | कौशिकीस्नान | २८ जनवरी | शङ्कराचार्यजयन्ती | १७ मई |
| गणेशपूजा | २२ अगस्त | गोवर्द्धनपूजा | १५ नवम्बर | गणेशावतार | ०१ फरवरी | जाह्नवीसप्तमी | १९ मई |
| सप्तर्षिपूजन | २३ अगस्त | अन्नकूट | १५ नवम्बर | नरकनिवारण १४ | १० फरवरी | जानकीनवमीव्रत | २० मई |
| राधाष्टमी | २६ अगस्त | कालिदासजयन्ती | १६ नवम्बर | मौनी अमावास्या | ११ फरवरी | नरसिंहचतुर्दशी | २५ मई |
| इन्द्रपूजारम्भ | ३० अगस्त | भ्रातृद्वितीया | १६ नवम्बर | शिशिरनवरात्रारम्भ | १२ फरवरी | वैशाखीपूर्णिमा | २६ मई |
| अगस्त्योदय | ०१ सितम्बर | चित्रगुप्तपूजा | १६ नवम्बर | सरस्वतीपूजा | १६ फरवरी | कूर्मजयन्ती | २६ मई |
| अनन्तपूजा | ०१ सितम्बर | प्रतिहारषष्ठीव्रत | २० नवम्बर | अचलासप्तमी | १९ फरवरी | बुद्धजयन्ती | २६ मई |
| अगस्त्यार्घदान | ०२ सितम्बर | जगद्धात्रीपूजारम्भ | २१ नवम्बर | माघीपूर्णिमा | २७ फरवरी | अगस्त्यास्त | २९ मई |
| पितृपक्षारम्भ | ०२ सितम्बर | गोपाष्टमी | २२ नवम्बर | रविदासजयन्ती | २७ फरवरी | वटसावित्रीव्रत | १० जून |
| जितिया | १० सितम्बर | अक्षयनवमी | २३ नवम्बर | महाशिवरात्रि | ११ मार्च | पञ्चाग्निव्रत | १३ जून |
| मातृनवमी | ११ सितम्बर | देवोत्थान ११ | २५ नवम्बर | सिंहेश्वरमेला | ११ मार्च | विन्ध्यवासिनीपूजा | १६ जून |
| विश्वकर्मापूजा | १७ सितम्बर | विद्यापतिपर्व | २७ नवम्बर | घण्टाकर्णपूजा | १४ मार्च | गङ्गादशहरा | २० जून |
| पितृपक्षान्त | १७ सितम्बर | कार्त्तिकेयपूजा | २९ नवम्बर | होलिकादाह | २८ मार्च | रामेश्वरदर्शन | २० जून |
| मलमासारम्भ | १७ सितम्बर | रविव्रतारम्भ | २९ नवम्बर | होली | २९ मार्च | वैवस्वतमन्वादि | २४ जून |
| मलमासान्त | १६ अक्टूबर | सामापूजा | २९ नवम्बर | सप्ताडोरारम्भ | २९ मार्च | कबीरजयन्ती | २४ जून |
| कलशस्थापन | १७ अक्टूबर | नवान्नपार्वण | ३० नवम्बर | वारुणीयोग | ०९ अप्रील | ग्रीष्मनवरात्रारम्भ | ११ जुलाई |
| सिमरियाधाम– | १७ अक्टू.– | कार्त्तिकी १५ | ३० नवम्बर | सोमवत्यमा | १२ अप्रील | जगन्नाथरथयात्रा | १२ जुलाई |
| कल्पवास | १६ नवम्बर | हरिहरक्षेत्रस्नान | ३० नवम्बर | वसन्तनवरात्रारम्भ | १३ अप्रील | हरिशयन ११ | २० जुलाई |
| विल्वाभिमन्त्रण | २२ अक्टूबर | सोनपुरमेला | ३० नवम्बर | मेषसङ्क्रान्ति | १४ अप्रील | चातुर्मास्यव्रतारम्भ | २० जुलाई |
| पत्रिकाप्रवेश | २३ अक्टूबर | कमलास्नान | ३० नवम्बर | नववर्षारम्भ | १४ अप्रील | गुरुपूर्णिमा | २४ जुलाई |
| | | जीवछस्नान | ३० नवम्बर | हरद्वार– | १४ अप्रील– | | |
| | | | | कुम्भयोग | १५ मई | | |

## • सौराठससौलासभा •

आषाढकृष्णतृतीयारविवासरतः (दिनाङ्क २७।०६।२०२१ ई.) आषाढकृष्णत्रयोदशीबुधवासर (दिनाङ्क ०७।०७।२०२१ ई.) यावत्।

- **उपनयनदिनानि—अप्रील**—२३। **मई**—१३, २१, २३। **जून**—२०, २१। **जुलाई**—१२, १४।
- **विवाहदिनानि—दिसम्बर**—०६, ०७, १०, ११, १४। **फरवरी**—१७, २१। **अप्रील**—१६, २३, २५, २६, ३०। **मई**—०२, ०३, ०७, ०९, १२, १३, २१, २३, २४, २६, ३०, ३१। **जून**—०४, ०६, १०, ११, २०, २१, २४, २५, २७, २८। **जुलाई**—०१, ०४, ०७, १४, १५।
- **तृतीयाद्यब्दीयद्विरागमनदिनानि—नवम्बर**—२६, २७, २९, ३०। **दिसम्बर**—०२, ०३, ०४। **फरवरी**—१५, १७, १९, २१। **मार्च**—०३। **अप्रील**—१६, १८, १९, २५, २६, २८, २९, ३०। **मई**—१२, १३।
- **प्रथमाब्दीयद्विरागमनदिनानि—फरवरी**—२१, २२, २४, २५, २८। **मार्च**—०१।
- **मुण्डनदिनानि—नवम्बर**—२७। **दिसम्बर**—०२, ०३। **जनवरी**—१८, २०। **फरवरी**—२२, २४, २५। **मार्च**—०१, ०३। **अप्रील**—१६, १९। **मई**—१३, १७, २१, २४, २७, ३१। **जून**—२१, २८।
- **गृहारम्भदिनानि—जुलाई**—२९, ३०। **अगस्त**—०३, ०५, ०६, ०८। **अक्टूबर**—२३, २६, २९, ३०, ३१। **दिसम्बर**—०२, ०३, ०५। **अप्रील**—२६, २९। **मई**—०१। **जून**—१९, २१, २४, २६, २८। **जुलाई**—२३।
- **गृहप्रवेशदिनानि—जुलाई**—२७, २९, ३०, ३१। **अगस्त**—०१। **अक्टूबर**—२१, २३, २६, २८, २९। **अप्रील**—१९, २३, २४। **जून**—१९, २१। **जुलाई**—१४, १९, २१, २२, २४।

**• अस्मिन् वर्षे ग्रहणाभावः •**

## • अथ चाक्षुषोपनिषद् •

ॐ अस्याः चाक्षुषीविद्याया अहिर्बुध्न्य ऋषिः गायत्री छन्दः सूर्यो देवता चक्षूरोगनिवृत्तये जपे विनियोगः। ॐ चक्षुः चक्षुः चक्षुः तेजः स्थिरो भव। मां पाहि पाहि। त्वरितं चक्षूरोगान् शमय शमय। मम जातरूपं तेजो दर्शय दर्शय। यथाहमन्धो न स्याम तथा कल्पय कल्पय। कल्याणं कुरु कुरु। यानि मम पूर्वजन्मोपार्जितानि चक्षुः प्रतिरोधकदुष्कृतानि सर्व्वाणि निर्मूलय निर्मूलय। ॐ नमश्चक्षुस्तेजोदात्रे दिव्याय भास्कराय। ॐ नमः करुणाकरायामृताय। ॐ नमः सूर्याय। ॐ नमो भगवते सूर्यायाक्षितेजसे नमः। खेचराय नमः। महते नमः। रजसे नमः। तमसे नमः। असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मा अमृतं गमय। उष्णो भगवाञ्छुचिरूपः। हंसो भगवान् शुचिरप्रतिरूपः। य इमां चाक्षुष्मतीं विद्यां ब्राह्मणो नित्यमधीते न तस्याक्षिरोगो भवति। न तस्य कुलेऽन्धो भवति। अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा विद्यासिद्धिर्भवति। ॐ नमो भगवते आदित्याय अहोवाहिनी अहोवाहिनी स्वाहा। इति नमस्कारपूर्व्वकं पाठं विधाय अर्घ्यं समर्प्य प्रणमेत्। अनेन चक्षूरोगनिवृत्तिः स्यादिति।

**धर्मः सनातनो नित्यं जनैः सम्यगनुष्ठितः।**
**विधत्ते सबलं राष्ट्रं समृद्धं निरुपद्रवम्॥**

आस्तिक्यभावनावशंवदानां श्रौतस्मार्त्तकर्मानुष्ठानतत्पराणां शिष्टानां तदनुशिष्टानामितरेषाञ्च जनानां धर्मोपार्जनौपयिकवर्षव्यापिकृत्यजात–सम्पादनोचितकालविशेषप्रबोधनप्रयोजनं निर्वोढुं दैवज्ञवर्यश्रीरामचन्द्रझाशर्म्मणा विनिर्मितं पण्डितमण्डलीसमनुमोदितं पारम्पर्यक्रमागतं पञ्चाङ्गमिदं नूनमलङ्कर्मीणतां कलयिष्यतीत्याशास्ते।

**गङ्गादशहरा** — **प्रो. राजेश सिंहः**
**संवत् २०७७** — **कुलपतिः**

अथैतत् त्रिचत्वारिंशत्तमे नूतनतिथ्यादिपत्रे मैथिलनिबन्धसम्मत–समयशुद्धि–व्रत–पर्व–विशिष्टयोगप्रभृतिविषयान् संरक्ष्य समयशुद्धौ विहितमुहूर्तानुसारं यज्ञ–विवाह–उपनयन–देवादिप्रतिष्ठा–द्विरागमन–मुण्डन–कर्णवेध–यात्रा–तडागकूपवापीखनन–गृहारम्भ–गृहप्रवेशप्रभृति–शुभदिनानि सन्निवेशितानि। तानि च **कामेश्वरसिंहदरभङ्गासंस्कृत–विश्वविद्यालय–ज्योतिषशोधकेन्द्राभ्यामायोजित**–ज्येष्ठकृष्णचतुर्दशीबृहस्पति–दिनाङ्क. २१।०५।२०२० क्रिस्ताब्दीय–**पण्डितसभयानुमोदितानि**।

अपि चात्र तिथ्यादिपत्रे वैशिष्ट्यमाधातुं स्वकीयाः सम्मतीः संस्कारप्रकारांश्च सहर्षं प्रेषयन्तु सुधीवराः।

अन्ते टङ्कणजन्यदोषाद् भ्रमाद्वा या अशुद्धयस्ताः पूर्वापरसन्दर्भ–मवलम्ब्य स्वयमेव संशोध्य व्यवहरन्तु गुणैकपक्षपातिनो विद्वांस इति निवेदयति।

**वटसावित्रीव्रतम्** — **पं. श्रीरामचन्द्रझाः**
**सौरदिनाङ्क ०९।०२।१९४२** — **"राष्ट्रपति–सम्मानितः"**

ग्राम+पोष्ट–जयदेवपट्टी
द्वारा–कुर्सों (नदियामी)
दरभङ्गा–८४७४०५

**• महामहोपाध्याय–महेशठक्कुरकृत–जगदम्बस्तुति •**

यन्त्र न मन्त्र न तन्त्र कछू नहि जानत योग समाधि विचारो।
वेद सुदर्शन जानत नाहि पुराण प्रमाण विधान सुधारो॥ १॥
जौं मिथिलानल है जननी न रहै कछु लेश सुधर्म प्रचारो।
और उपाय न देखि पड़ै अवलम्ब हमें एक पाँओ तिहारो॥ २॥
याचक एक करय अर्जी मर्जी करिके सुनु शैलकुमारी।
जग मे जत देव विराजत हों तत् को प्रतिपालि पुकारि के हारी॥ ३॥
धाय पड़ौं पद पङ्कज मे जगदम्ब रहो अवलम्ब हमारो।
तारि सको मम त्राण करो नहि तारिणि नाम निरर्थ तिहारो॥ ४॥
नहि तारिणि नाम निरर्थ तिहारो ॥ श्रीजगदम्बार्पणमस्तु ॥